निग्रहस्थानs are not only to be pointed out in जल्प and वितण्डा type of debates but even in वाद type of debate. In the former case these have to be pointed out until the debater is defeated. But in the case of वाद until the obstacles are removed for the conclusion.

न केवलं वादवितण्डयोः निग्रहस्थानसद्भावः किन्तु वादेऽपि । अयं तु विशेषः न वादजल्पयोरिव समस्तं किन्तु यावत् तत्वनिर्णयविरोधि तावदेव । (सुधा)

**The validity of all cognitions is cognised by sākṣin only**

All logical arguments have to be based on प्रत्यक्ष and आगम. Therefore, such arguments that are against प्रमाण have to be rejected.

**प्रत्यक्षागममूलास्तु न्यायाः सर्वे भवन्ति हि**
**न्यायाभासा अमूलाः स्युः** (अ.व्या.)

There are no logical arguments that are based on only anumāna, since anumāna itself is based on प्रत्यक्ष and आगम.

The validity of anumāna is cognised by साक्षी only. The validity of all pramāṇas is cognised by साक्षी only.

**यत् साक्षिणैव मानानां मानत्वमवसीयते** (अ.व्या.)

सर्वेषां मानानां मानत्वं साक्षिणैव अवसीयते । अन्यथा अनवस्थादिप्रसङ्गात् । तस्मात् अनुमानस्यापि प्रामाण्यं तेनैव ज्ञायते । (सुधा)

In the instance of अप्रमाणज्ञान the मनस् contaminated by the likes and dislikes takes it as प्रमाण. However on the scrutiny of the facts its invalidity is comprehended by साक्षी.

अमानस्य तु मानत्वं मानसत्वात् चलं भवेत् । (अ.व्या.)

**The proceedure of cognition of validity by साक्षी :**

i) The cognition is cognised by साक्षी. In the first instance its cognition is of the form that if it is not sublated it is valid, otherwise it is not valid.

सर्वं ज्ञानं साक्षी गृण्हाति । यद्यस्य बाधो भविष्यति तदा अप्रमाणं नो चेत् प्रमाणमेवेति तत्प्रामाण्यमपि गृण्हाति ।

ii) If necessary by applying परीक्षा i.e. scrutiny, the validity or invalidity is decided.

सति प्रयोजनजिज्ञासायां परीक्षामनुसृत्य प्रामाण्यमप्रामाण्यं वा व्यवस्थापयति ।

iii) If scrutiny is not available, then, साक्षी will not proceed to settle the validity or otherwise of the cognition concerned.

अलाभे परीक्षायाः विशेषावधारणादुदास्ते ।

iv) At this state, the Manas being contaminated

by likes and dislikes by means of distorted form of scrutiny presents the validity. This is sometime sublated and sometime not sublated.

अस्यामवस्थायां रागादिकलुषितं मनः परीक्षाभाससहायं प्रामाण्यादिकमवधारयति । तच्च कदाचित् बाध्यते कदाचित् न । (सुधा)

In this context शेषवाक्यार्थचन्द्रिका raises certain interesting points and answers the same.

i) In the above procedure it is stated that अप्रमाण-ज्ञान is cognised by मनस्. It goes against the doctrine that all cognitions are cognised by साक्षी. It is also does not work to say that साक्षी cognises अप्रमाण cognition also but does not cognise its validity. This goes against the स्वतःप्रामाण्य doctrine.

ननु अमानस्य मानत्वं मनसैव गृह्यते न साक्षिणा इति वदता भ्रमरूपं ज्ञानं मनसैव गृह्यते नतु साक्षिणेति तावत् न वक्तुं युक्तम् । ज्ञानमात्रस्य साक्षिवेद्यतायाः स्थितत्वेन अपसिद्धान्तापातात् ।

नापि तत्र ज्ञानस्य साक्षिणा ग्रहणेऽपि प्रामाण्यं न गृह्यते इति वक्तुं युक्तम् । प्रामाण्यस्य स्वतस्त्वेन ज्ञानग्राहकस्य साक्षिणः प्रामाण्यग्रहण-स्वभावस्थित्या ज्ञानं गृहीत्वा तत्प्रामाण्याग्रहणे स्वभावहानिप्रसङ्गात् । ततश्च भ्रमस्थले ज्ञानवत् तत्प्रामाण्यस्यापि साक्षिणैव ग्राह्यत्वात् कथं प्रामाण्यावधारणस्य मानसत्त्वं कथं चैवं सति साक्षिणो याथार्थ्ये नियमः ।

Raising these points, शेषचन्द्रिका points out the answers from the very statements in the Sudhā.

Sudhā clearly states that both प्रमा and भ्रम are cognised by साक्षी.

सर्वमपि ज्ञानं गृण्हाति (सुधा)

प्रमारूपमिव भ्रमरूपमपीत्यर्थः । तथाच न अपसिद्धान्तः इति भावः ।

There is no प्रामाण्यस्वतस्त्वरूपस्वभावहानिः ।

नापि स्वभावहानिप्रसङ्गः । तद्धि तदा भवेत् यदि ज्ञानमेव साक्षिवेद्यं न तत्प्रामाण्यमिति स्यात् । नचैतदस्ति ज्ञानवत् प्रामाण्यस्यापि साक्षिवेद्यत्वाभ्युपगमात् ।

This does not lead to याथार्थ्यभङ्ग. साक्षी cognises the cognition as valid as a general rule, then, undertakes the scrutiny, if there is no sublation then the validity is confirmed. Otherwise its invalidity is realised.

i) नापि याथार्थ्यनियमभङ्गः ज्ञानं गृण्हता साक्षिणा प्रमाणमेवेति प्रामाण्यग्रहणानभ्युपगमात् । किन्तु प्राथमिकप्रामाण्यग्रहणमेव । अनन्तरं प्रमाणमेव एतदित्यपि प्रामाण्यग्रहणं साक्षिणा अभ्युपगम्यते ।

ii) दोषदर्शने तु अप्रामाण्यं व्यवस्थापयति ।

**Arthāpatti, upamāna and Anupalabdhi are covered by Anumāna only**

Anuvyākhyāna affirms the fact that there are only three प्रमाणs. The other three accepted by others are

included in Anumāna only.

अर्थापत्त्युपमाभावाः अनुमान्तर्गताः । (अ.व्या.)

Arthāpatti is of the nature of cognition of व्याप्य leading to the cognition of व्यापक. Hence, it is Anumāna.

व्याप्यदर्शनात् व्यापकबुद्धिः अर्थापत्तिः अनुमानमेव । (सुधा)

There is no conflict between two प्रमाणs which is claimed to be the ground for अर्थापत्ति.

प्रमाणद्वयविरोधोऽनुपपत्तिरिति चेत् न प्रकृतोदाहरणे तदभावात् । विरोधो हि तदा स्यात् यदि जीवतीत्यस्य गृहे अस्तीत्यर्थः स्यात् । यदि वा गृहे नास्तीत्यस्य न जीवतीत्यर्थः स्यात् ।

The objection raised to consider the instances of अर्थापत्ति as अनुमान is not sustainable.

अनुमानत्वपक्षे किं बहिर्भावे जीवनमात्रं लिङ्गमुत गृहाभावमात्रम् । अथवा विशिष्टम् ।

नाद्यद्वितीयौ व्यभिचारात् । न तृतीयः विरुद्धयोः विशेषणविशेष्य भावानुपपत्तेः ।

This argument against anumāna is not valid. There is no विरोध between जीवन and गृहाभाव. जीवनगृहा-भावयोः विरोधस्य अभावात् । भावे वा अर्थापत्तेरप्यनुपपत्तेः ।

उपमान is defined as comprehending the similarity in an object that is remembered, by the cognition of the similarity in the object that is actually seen.

गृह्यमाणे वस्तुनि स्मर्यमाणप्रतियोगिकसादृश्यदर्शनात् स्मर्यमाणे गृह्यमाणप्रतियोगिकसादृश्यप्रतीतिः उपमानम् ।

This also can be included in anumāna by the व्याप्ति.

यो यत्सदृशः सः तत्सदृशः इति व्याप्तिबलेन गमकत्वादनुमानमेव ।

The अभावप्रमाण or अनुपलब्धिप्रमाण is defined as that which enables to comprehend the absence of the object that could be cognised by perception.

घटादिप्रत्यक्षयोग्यार्थप्रतियोगिकाभावप्रतीतिसाधनं प्रमाणम् अभावः।

This is also a case of anumāna. By the non-availibility of the object in the place its absence is inferred.

तच्च अनुपलब्धिलक्षणं लिङ्गमेव ।

The absence of external objects is comprehended both by प्रत्यक्ष and अनुमान while सुख etc internal only by साक्षिप्रत्यक्ष.

i) बाह्यानां प्रत्यक्षयोग्यानामर्थानामभावः प्रत्यक्षानुमानवेद्यः ।

ii) सुखादेरान्तरस्य नियमेन साक्षिणैव ।

**Upakrama, Upasamhāra etc are also a form of Anumāna**

उपक्रम, उपसंहार etc. also of the nature of anumāna. These assist the comprehension of श्रुति passages.

**प्रारम्भाद्याश्च युक्तयः । आगमार्थावसित्यर्थाः नियतव्याप्त-योऽखिलाः । (अ.व्या.)**

प्रारम्भाद्याः – उपक्रमाद्याः ।

वाक्य, प्रकरण etc. also of the same nature.

**वाक्यं प्रकरणं स्थानं समाख्या च तथाविधाः । (अ.व्या.)**

शाकुनलिप्यक्षर etc are also not separate प्रमाण.

i) शाकुनलिप्यक्षरचेष्टानामन्तर्भावस्य न विलक्षणत्वाधिकरणे सूचित-त्वात् । सम्भवैतिह्ययोः अनुमानागमान्तर्भावस्य सर्ववादिसंमतत्वात् । परिशेषस्य च परिशेषो मिथःसिद्धिरित्यनेनैव अनुमानत्वस्य स्थितत्वात् । (सुधा)

**The role of तर्क**

तर्क is not a प्रमाण by itself. But it is प्रमाणानुग्राहक. It is of the nature of अनिष्टप्रसञ्जन. This is of two types :

i) प्रामाणिकपरित्यागः ii) अप्रामाणिकस्वीकारश्च ।

तर्कः प्रमाणमेव न भवति । अनिष्टप्रसञ्जनं तर्कः । अनिष्टं च द्विविधम् । प्रामाणिकपरित्यागो अप्रामाणिकस्वीकारश्चेति । प्रसङ्गो नाम व्याप्याङ्गीकारे अनिष्टव्यापक प्रसञ्जनम् ।

सोऽयं तर्कः, प्रमाणानामनुग्राहकः । (सुधा)

In the context of utilisation of तर्क, अनुव्याख्यान lays down certain guidelines.

**स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणम् ।**

**स्वन्यायै दूषणं च स्यात् साधितैः प्रतिवादिनः । (अ.व्या.)**

The न्यायs that are acceptable to वादिन् are स्वन्याय. Those that are acceptable to प्रतिवादिन् are परन्याय.

**Interpretation of मायामात्र**

After discussing the guidelines for the philosophical debate. Anuvyākhyāna states that the expression मायामात्र in the sutra does not mean अनिर्वाच्य.

> एवं संशोधितन्यायसदागमविरोधतः ।
> नानिर्वाच्यमिह प्रोक्तं मायामात्रपदेन हि ।। (अ.व्या.)

अद्वैतिन्s use the expression अनिर्वाच्य in the sense of सदसद्विलक्षण. This is contradiction.

> विलक्षणं सदसतोरिति हि व्याहतं वचः । (अ.व्या.)

The contradition involved in this statement is discussed in Nyāyasudhā in detail.

**There cannot be any जिज्ञासा if ब्रह्मन् is निर्धर्मक**

In the coarse of this discussion it is pointed out that the advaita concept of निर्धर्मकत्व of ब्रह्मन् leads to a number of problems for him.

i) If ब्रह्मन् has no attributes then, he ceases to be जिज्ञास्य

> .................यदि धर्मा न केचन ।
> ब्रह्मणो नैवजिज्ञास्यं जिज्ञासा धर्मनिर्णयः
> इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् । (अ.व्या.)

ii) If ब्रह्मन् has no attributes then शास्त्र cannot convey him

सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते । (अ.व्या.)

iii) If the attributes of ब्रह्मन् are considered as मिथ्या, then वेद that conveys these becomes अप्रमाण. There are no other means to know ब्रह्मन्.

नहि वेदं विना ब्रह्म वेद्यं धर्माश्च तद्गताः । (अ.व्या.)

**Refutation of विश्वमिथ्यात्व theory of Advaita**

Next Anuvyākhyāna takes up the question of विश्वमिथ्यात्व and refutes it. विश्वसत्यत्व is established by प्रबलप्रमाण. The anumāna that is proposed to establish विश्वमिथ्यात्व is दुर्बल.

विश्वं तावत् स्वभावतो बहुत्वेन च प्रबलैः ईशवाक्यादिभिः सर्वैः प्रमाणैः सत्यतया अवगतम् ।

विवादपदं मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् इत्याद्यनुमानं स्वभावैकत्वात् दुर्बलम् । तथा च सकलप्रमाणविरुद्धस्य अनुमानस्य अप्रमाण्योपपत्तेः विश्वस्य सत्यत्वमेव युक्तम् । (सुधा)

Advaitin tries to establish मिथ्यात्व by the श्रुति 'नेह नानास्ति किञ्चन.' However it cannot be taken as convey-ing मिथ्यात्व as it is opposed to सत्यत्व that is conveyed by प्रत्यक्ष.

अस्तु तर्हि नेह नानास्तीत्यद्वैतपरः आगमः सर्वस्यापि मिथ्यात्वे

प्रमाणमिति चेन्न । तस्य विश्वसत्यत्वग्राहक प्रत्यक्षबाधितत्वेन अतदर्थत्वात् ।

**The आगम प्रामाण्य is cognised by साक्षिप्रत्यक्ष**

**साक्षिप्रत्यक्षता ह्येह एव मानानां मानतेयते ।** (अ.व्या.)

The प्रामाण्य of प्रमाण can be comprehended by the cognition of it but not by mere presence.

बाह्यप्रत्यक्ष cannot help to cognise the प्रामाण्य of प्रमाण as it is likely to go wrong. If one more प्रत्यक्ष is resorted to comprehend the प्रामाण्य of प्रत्यक्ष, that will require another प्रत्यक्ष to establish it. Hence, साक्षी has to be taken as establishing the प्रामाण्य of all प्रमाणs including आगम in the matters that belong to area of प्रत्यक्ष. विश्वसत्यत्व belongs to the area of प्रत्यक्ष.

प्रमाणानां प्रामाण्यं हि न सत्तामात्रेण निश्शङ्कव्यवहारहेतुः । अपितु प्रमितमेव । नहि बाह्यप्रत्यक्षादिकमेव प्रामाण्यप्रमितिसाधनम् तत्प्रामाण्यप्रमितेरपि उक्तन्यायेन आवश्यकत्वात् । प्रत्यक्षाद्यन्तरान्वेषणे अनवस्था । साक्षिवेद्यत्वे च सर्वप्रमाणप्रामाण्यस्य न कश्चिद् दोषः । साक्षी हि चैतन्यरूपतया स्वप्रकाशः । प्रामाण्यं च ज्ञानग्राहकग्राह्यमिति स्वप्रामाण्यं स्वयमेव गृण्हातीति न अनवस्था आपद्यते । अतः साक्षिवेद्यमेव सर्व-प्रमाणानां प्रामाण्यमङ्गीकार्यम् । (सुधा)

It cannot be contended that the प्रामाण्य comprehended by प्रत्यक्ष is तात्कालिक i.e. temporary. It pertains to present time only. In that case let the

प्रामाण्य of आगम also be temporary.

**तात्कालिकं प्रमाणत्वमक्षजस्य यदा भवेत् ।**

**ऐक्यागमस्य किं न स्यात्** (अ.व्या.)

यदि साक्षिगृहीतमपि विश्वसत्यत्वग्राहिणः अक्षजस्य प्रामाण्यं तात्कालिकमेव भवेत् । तर्हि ऐक्यागमस्यापि प्रामाण्यं साक्षिगृहीतत्वा-विशेषात् । तात्कालिकं स्यादेव ।

On this advaitin states that ऐक्यागम प्रामाण्य is also तात्कालिक. It invalidates प्रामाण्य of प्रत्यक्ष in respect विश्वसत्यत्व and the validity of itself also on attaining मोक्ष. This is rediculous. If ऐक्यागम is invalidated, then, विश्वसत्यत्व has to be re-established.

i) ननु ऐक्यागमप्रामाण्यमपि तात्कालिकमेव । किन्तु प्रत्यक्ष-माभासीकृत्य निवर्तते । यथोक्तम् ।

**वेणुसङ्घर्षजो वह्निः दग्ध्वा शाम्यति तद्वनम् ।**

**एवं गुणव्यत्ययजो वेदः शाम्यति तद्यथा ।**

ii) **ऐक्यप्रमाणमिथ्यात्वं तदा विश्वस्य सत्यता ।** (अ.व्या.)

ऐक्यागमस्यापि प्रामाण्यं यदि तात्कालिकं स्वीक्रियते तदा विश्वस्य सत्यतैव स्यात् । (सुधा)

Advaitin argues that attaining brāhmana state is liberation. If प्रत्यक्षप्रामाण्य is not invalid it results in विश्वसत्यत्व and leads to अद्वैतहानि. Hence, प्रत्यक्षप्रामाण्य has to be taken as बाध्य. This recoiles on advaitin.

If आगमप्रामाण्य is अबाध्य then also there will be अद्वैत-हानि, since ब्रह्मन् and आगम two will be present.

i) ननु अद्वैतब्रह्मावस्थानं मोक्षः । स च प्रत्यक्षप्रामाण्यस्य अबाध्यत्वे व्याहन्येत । प्रपञ्चसत्यत्वेन सद्वैततापत्तेः । अतः प्रत्यक्षप्रामाण्यं साक्षिणा तात्कालिकमेव गृह्यते इति कल्प्यते ।

ii) एवं तर्हि ऐक्यवाक्यप्रामाण्यमपि तथाविधमेव मन्तव्यम् । तदबाध्यत्वेऽपि अद्वैतहानिसामान्येन उक्तलक्षणमोक्षासिद्धेः ।

प्रत्यक्ष is superior by its very nature and also on the ground that it is उपजीव्य.

न केवलं उपजीव्यत्वादिगुणेन अन्यतः प्रबलं प्रत्यक्षं किन्तु स्वभावतोऽपि ।

However, in the matters that are conveyed by Veda only, the vedapramāṇa is superior.

प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् ।

अत्र पृप्रथिव्यादि प्रपञ्चस्य प्रस्तुतत्वात् न विरोधः ।

The contention that देहात्मैक्य is प्रत्यक्षसिद्ध but it is invalidated by anumāna and āgama is not valid. The distinction between the body and ātman is realised sponteneously even by animals.

i) देहात्मत्वं प्रत्यक्षप्राप्तमपि 'देहो नात्मा भूतत्वात् कार्यत्वात्' 'तं स्वात् शरीरात् प्रवृहेत्' इत्यागमेन च बाधितं दृष्टम् ।

ii) देहादिसङ्घातस्य आत्मनश्च अन्योन्यं भेदः, तद्धर्माणां च परस्परमसंसर्गः प्रतीयत एव ।

जातमात्रा मृगाः गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते । (अ.व्या.)

तस्मादस्ति मृगादीनां पूर्वदेहस्मरणम् । तथैव मानुषादीनामिति सिद्धम् । (सुधा)

**साक्षी comprehends past and future objects also**

The fact of साक्षी comprehending past and future and not being confined to present only can be ascertained by the process of comprehending the meaning of a sentence.

A sentence conveys sentence meaning but not merely word meanings. This requires comprehension of word meaning. This again requires the knowledge of the objects conveyed by the words. This knowledge has to be obtained by other प्रमाणs but not by the very words. Since, a sentence conveys the objects present in the past and future, साक्षी is the प्रमाण to convey these. This establishes the fact that. साक्षिप्रत्यक्ष is not confined to present time only but it extends to past and future also.

वाक्यं तावत् पदार्थसंसर्गविशेषलक्षणं वाक्यार्थमेव बोधयति न पदार्थमात्रम् । तच्च अपेक्षते पदानां पदार्थेषु वाचकत्वशक्तिग्रहम् । शक्तिग्रहश्च पदार्थग्रहम् । पदार्थग्रहश्च प्रमाणान्तरायत्तो न पदवाक्य-

जन्यः इतरेतराश्रयदोषप्रसङ्गात् । यत्र चातीतानागतार्थसंसर्गो वाक्यार्थः । तत्र अतीतानागतार्थग्रहणमावश्यकम् । तच्च साक्षिणा विना न भवतीति कथमतीतानागतार्थग्राहिणः तस्य वर्तमानमात्रविषयत्वम् । (सुधा)

**शक्तिश्चेद् वर्तमाने स्याद् नातीतानागतं वदेत् । (अ.व्या.)**

मानसप्रत्यक्ष also comprehends the past objects.

**प्रत्यक्षं मानसं चैव यदातीतार्थगोचरम् । (अ.व्या.)**

प्रत्यभिज्ञा is accepted by all to establish आत्मा. This प्रत्यभिज्ञा conveys the object that combines अतीतत्व and वर्तमानत्व. This is also comprehended by साक्षी.

**मानत्वं प्रत्यभिज्ञायाः अपि सर्वानुभूतिगम् ।**
**अतीतवर्तमानत्वधर्मिणी सा च दृश्यते । (अ.व्या.)**

अतीतत्ववर्तमानत्वविशिष्टार्थविषयिणीत्यर्थः । साक्षिणा दृश्यते । (सुधा)

## Refutation of the concept of प्राकट्य

भाट्टमीमांसकs accept a new concept designated as ज्ञातता or प्राकट्य. According to them the knowledge is not cognised by perception but it is inferred by ज्ञातता. We have the experiences like 'ज्ञातो घटः' 'प्रकटो घटः' 'the jar is revealed' 'the jar is known.' From this the knowledge of the jar is inferred.

To establish ज्ञातता or प्राकट्य, they argue as

follows : The knowledge and object are विषय and विषयी. This position between the two is not developed by their presence, nor these are related by तादात्म्य or सारूप्य. Therefore, it has to be envisaged that knowledge invests the object with a special capacity to enable it to reveal itself to the observer. This is called ज्ञातता or प्राकट्य.

अस्ति तावदर्थज्ञानयोः विषयविषयिभावनियमः नचासौ सत्तया कारणत्वेन वा । नापि तादात्म्यसारूप्याभ्याम् । तस्मात् येन यस्य अतिशयः उत्पद्यते तस्यासौ विषयः इति । ततश्च अर्थस्य विषयत्वसिद्धये ज्ञानजन्यः विषयगतः अतिशयः अङ्गीकार्यः । (सुधा)

This contention is not acceptable, because, the past and future objects cannot be ज्ञानविषय if this procedure is followed. The past and future objects are not available to invest them with special capacity.

तथा सति अतीतानागतयोः ज्ञानविषयत्वासम्भवात् । नहि असति धर्मिणि तत्र धर्मोत्पत्तिः सम्भवति ।

Further, whether ज्ञातता requires another ज्ञातता to reveal itself or not. If not it cannot be cognised, if requires another ज्ञातता that again requires one more, this will lead to अनवस्था.

अपिच ज्ञाततायामपि ज्ञाततोत्पादो अङ्गीक्रियते न वा । नेति पक्षे ज्ञानविषयत्वं न स्यात् ।

आद्ये ज्ञाततताप्रवाहमङ्गीकुर्वाणस्य कल्पनागौरवं स्यात् ।

**The meaning of मायामात्र**

Anuvyākhyāna concludes this adhikaraṇa by explaining the meaning of the word मायामात्र in the sūtra.

i) **अतः प्रज्ञात्र मायोक्ता जैव्युपादानमेव**
**सा निमित्तमैश्वरी मुख्या** । (अ.व्या.)

ii) प्रज्ञाशब्दश्च लाक्षणिको वासना । (सुधा)

वासना stored in the मनस् of जीव is उपादानकारण while ईश्वरप्रज्ञा is निमित्तकारण. The word माया refers to both वासना of जीव and प्रज्ञा of ईश्वर.

न केवलं जीवप्रज्ञा अत्र माया किन्तु ऐश्वरी च ।

The expression मायामात्र means caused by these two viz. जीववासना and भगवतः माया.

निर्मितं त्रातमेव च । ताभ्यां सह पृथक् चैवमायामात्रमितीर्यते ।
उभाभ्यां मातमैश्वर्यात् त्रातं सह पृथक् ततः । (अ.व्या.)

**पराभिध्यानाधिकरणम्** (III-2-3)

ॐ पराभिधानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ ॐ

**The bondage and liberation are caused by the will of God**

The bondage and the liberation are caused by the Supreme God only. In view of this the dream is

caused by the will of God only.

न केवलं स्वप्नः किन्तु तिरोधानमपि ईश्वरेच्छयैव इत्येषः अर्थः अनेन सूत्रेण उच्यते । (सुधा)

The expression अभिध्या means इच्छा.

Anuvyākhyāna states the points made in सन्ध्यधिकरण and पराभिध्यानाधिकरण as follows :

सृष्ट्वैव वासनाभिश्च प्रपञ्चं स्वाप्नमीश्वरः

वासनामात्रतां तस्य नीत्वाऽन्तर्धापयत्यजः ।

## सुषुप्तिबोधमोहाधिकरणानि (III-2-4,5,7)

**The deep sleep, waking state and soon are caused by the God**

The deep sleep, the awakening and the state of soon are also caused by the will of the Supreme God.

ॐ तदभावो नाडीषु तच्छ्रुतेः ॐ

The expression तदभावः refers to सुषुप्ति i.e. deep sleep, during this state the जीव enters into the God.

ॐ अतः प्रबोधोऽपि ॐ

The awakening is also caused by the will of God only.

ॐ मुग्धेऽर्धसम्पत्तिः ॐ

During the state of soon also जीव partly enters into the God.

सुषुप्तिबोधमोहांश्च स्ववशस्तद्वशं सदा । जीवं नयति जीवेशो ।

(अ.व्या.)

## कर्मानुस्मृत्यधिकरणम् (III-2-6)

ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ

In this adhikaraṇa it is stated that the same जीव emerges back from the deep sleep state to waking state. This can be ascertained from the fact that he completes the work that he undertook before going to sleep. He recognises himself as the same person who was before sleep. There are श्रुतिs that state it and there are certain injunctions prescribed for him.

i) कर्मशेषसमापनात् ii) प्रत्यभिज्ञानात् iii) शब्देभ्यः iv) विधिभ्यश्च

## न स्थानतोऽप्यधिकरणम् (III-2-8)

ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्रहि ॐ

In this adhikaraṇa it is stated that the different forms of the God present in different places are the forms of only one and the same God.

**न स्थानभेदतोऽप्यस्य भेदः कश्चित् परेशितुः ।** (अ.व्या.)

स्थानानां सुरनरादिशरीराणां तत्रापि दक्षिणाक्ष्यादीनां भेदे सत्यपि अस्य तत्रतत्र स्थितस्य परेशितुः कश्चित् भेदो नास्ति ।

**सर्वत्राशेषदोषोज्झपूर्णकल्याण सद्गुरुः ।** (अ.व्या.)

The objection that विश्व etc. forms are stated with

different roles such as causing waking state, dream state etc hence these are different is stated by the expression भेदात् in this sūtra, is rejects by न. The reason to reject this objection is given by the remark प्रत्येकमतद्वचनात् i.e. each one of these stated to be identical with the other.

Anuvyākhyāna further adds a strong argument that if the statement made in अवान्तरवाक्य is against the statement of महावाक्य, the former has to be reconciled with the latter.

तद्विरुद्धं तु यत् तत्र मानं नैव क्वचिद् भवेत् ।
महातात्पर्यरोधेन कथं तन्मानमत्रमत्रतु (अ.व्या.)

सकलस्मृतीतिहासपुराणानां परमेश्वरस्याशेषदोषदूरत्वे समस्तगुणपूर्णत्वे च यन्महातात्पर्यतद्विरोधेन तद्वाक्यं भगवतः दोषित्वादौ कथं मानं भवेत्। (सुधा)

मोक्षादिप्रयोजनेन शास्त्रेण तत्साधनभूतभगवद्गुणोत्कर्षनिर्दोषता-ज्ञानमेव जीवानामुत्पादनीयमित्यतः सकलगुणपरिपूर्णे निरस्त समस्तदोषे नारायण एव अशेषशास्त्रस्य महातात्पर्यमित्यवसीयते ।

Anuvyākhyāna elaborates these points fully.

यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् ।
जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं नचान्यथा ।
यो मामशेषाभ्यधिकं विजानाति स एव माम् ।
विजानात्यखिलांस्तस्य दद्यां कामान् परं पदम् ।

महातात्पर्यमुख्यस्य विरोधादत एवहि ।
दोषित्वनिर्गुणत्वाल्पगुणत्वादि कथंचन ।
नार्थः श्रुतिपुराणादेस्तद्विरुद्धोऽखिलस्य च ।
अर्थः स्वयं विनिर्णीतो वासुदेवेन सादरम् ।

उपमाधिकरणम् (III-2-10)

**Refutation of भेदाभेद theory**

In this adhikaraṇa the भेदाभेद view is rejected. Pūrvapakṣin argues that जीवब्रह्मभेद is accepted by you. We will establish अभेद by the anumāna जीवः ब्रह्मभिन्नः चेतनत्वात्, ब्रह्मांशत्वान्. Hence, जीव is भिन्नाभिन्न from ब्रह्मन्.

इह परमेश्वरे जीवस्य आत्यन्तिकभक्तिसिद्धये भेदाभेदमतं निराक्रियते । जीवब्रह्मणोः भेदः तावत् सिद्धान्तिना अङ्गीकृतः एव । अभेदस्तु अनुमानतः सिद्धः जीवो ब्रह्माभिन्नः चेतनत्वात् ब्रह्मवत्, ब्रह्मांशत्वात् । यो यदंशो सः तदभिन्नः यथा ईश्वरांशो मत्स्यादिः तदभिन्नः । अतः भिन्नाभिन्नः जीवः ब्रह्मणा इति प्राप्ते प्रतिविहितं सूत्रकृता सूर्यकादिवत् इति सूत्रखण्डेन । (सुधा)

**Jiva is आभास of ब्रह्मन् and distinct from him**

Anuvyākhyāna rejects the pūrvapakṣinâs contention by pointing out that the जीव is आभास of ब्रह्मन्. like प्रतिबिम्ब of सूर्य it is distinct from ब्रह्मन्.

ना च चित्त्वादभिन्नत्वं जीवस्येशवदाप्यते ।
यत आभासतामेव श्रुतिरस्य वदत्यलम् । (अ.व्या.)

एतदुक्तं भवति – न चेतनत्वाद्यनुमानेन ब्रह्माभेदसाधनं युक्तम् ।
जीवो ब्रह्माभिन्नो न भवति तदाभासत्वात् यथा सूर्यकादिः ।
सूर्यकादिः – सूर्यप्रतिबिम्बादिः (सुधा)

Anuvyākhyāna quotes श्रुति in support of आभासत्व of जीव.

i) **यथैषा पुरुषे छाया एतस्मिन्नेतदाततम् ।**

ii) **छाया यथा पुंसदृशी पुमधीना च दृश्यते ।**
**एवमेवात्मकाः सर्वे ब्रह्माद्याः परमात्मनः**
**सत्ताप्रतीतिकार्येषु पुमधीना यथेयते**
**आभासा एव पुरुषा मुक्ताश्च परमात्मनः ।** (अ.व्या.)

All are not directly प्रतिबिम्बs of the Supreme God. There is a heirarchy of them. It is briefly as follows.

1) रमा is प्रतिबिम्ब of Supreme God.

1) चतुर्मुखब्रह्मा is प्रतिबिम्ब of Supreme God through रमा.

2) गरुड and शेष through चतुर्मुख ब्रह्मा and रमा.

3) इन्द्र and काम through गरुडशेष, चतुर्मुखब्रह्मा and रमा.

In this way there is a detailed heirarchy of all deities and other jīvas.

**छाया विष्णोः रमा तस्याः छाया धाता विशेषकौ ।**
**तस्ये इन्द्रकामौ च तयोस्तयोरन्येऽखिला अपि ।** (अ.व्या.)

**The objection against concept of आभासत्व of जीव**

On the concept of जीव being the आभास of परमात्मा an objection is raised.

To be आभास, उपाधि i.e. a conditioning factor is necessary. for instance the आभास of सूर्य has the उपाधि of water.

When there is a reflection of sun in water there will be आभास i.e. प्रतिबिम्ब of sun. In the present case for जीव to be आभास of परमात्मा there is no उपाधि i.e. conditioning factor. Hence जीव cannot be considered as आभास.

**आभासत्वं हि निर्णीतं जीवस्य परमात्मनः**

**तन्न युक्तं यदाभास उपाध्यायत्त ईयते ।** (अ.व्या.)

Further, प्रतिबिम्ब is not distinct from बिम्ब.

When the eye rays reach the mirror and obstructed by it return, reveal the face in it. There is no real प्रतिबिम्ब apart from the बिम्ब. The two are identical.

दर्पणादिना सन्निकृष्टाः प्रतिहताः परावृत्ताः नयनरश्मयः मुखेन सन्निकृष्टाः तदेव विषयीकुर्वन्ति । न तु ततो अन्यः आभासो नाम अस्ति ।

प्रतिबिम्ब appearing as different, the change of its right and left position etc. is an illusion. This

illusion is caused by the उपाधि i.e. mirror. As soon as the mirror is withdrawn it disappears. The आभास is not distinct from the object. Hence, on the basis of आभासत्व of जीव its distinction from परमात्मा cannot be established.

तत्र व्यवच्छेदः पराक्त्वं सव्येतरव्यत्यासश्चेत्यादिकं भ्रान्त्यैव प्रतीयते । सोपाधिकश्च अयं भ्रमः इति यावदुपाधिसत्त्वं न निवर्तते । एवं च आभासस्य अभेदेन व्याप्तत्वात् भेदसाधने विरुद्धत्वम् ।

Stating the अभेद between the बिम्ब and प्रतिबिम्ब, भेदाभेदवादिन् presents his concept of अभेद as समुदायैक्य.

**The concept of समुदायैक्य of भेदाभेदवादिन्**

i) मायावादिनो हि जीवानां प्रत्यक्षं ब्रह्मणा अत्यन्ताभेदमङ्गीकुर्वते. न चैवमस्मन्मतम् । समुदायैक्ये भेदस्यापि सत्त्वात् ।

ii) ब्रह्म एकमेव स्वभावसिद्धं तत्त्वं तत् परमार्थभूतं मायासम्बन्धात् ईश्वरत्वमापद्यते । स च सर्वज्ञः सर्वेश्वरः जगज्जननादिकर्ता । जीवास्तु ब्रह्मणः अंशाः चित्स्वभावाः वन्हेरिव विस्फुलिङ्गाः । अत एव ब्रह्मणा भिन्नाभिन्नाः । परस्परमीश्वराच्च भिन्ना एव ब्रह्म तु सकलचेतन समुदायात्मकमतिरिक्तं च ।

Brahman is one and ultimate reality. Brahman associated with māyā becomes Īśvara. He is omniscient and omnipotent. He is the creater of the world. Jīvas are amśa of brahman like the sparks of the fire. These are sentient in nature and different and identical with brahman. These are distinct from

Īśvara and also mutually distinct. Brahman is a complex of all chetanas but distinct from them.

न जीवानां ब्रह्मणा भेदाभेदौ स्वाभाविकौ । किन्तु अभेदः स्वाभाविकः । भेदस्तु औपाधिकः । यथा ईश्वरांशानां मत्स्यादीनामीश्वरेण ।

इयांस्तु विशेषः । मत्स्याद्याः जगदनुग्रहार्थं लीलाविग्रहोपाधिभिन्नाः अतिरस्कृतैश्वर्यादिमन्तः । जीवास्तु अनाद्यविद्याकामकर्मनिबन्धन-देहेन्द्रियाद्युपाधिभिन्नाः तिरस्कृतब्रह्मस्वभावाः उपाधिनिमित्तदुःखादि-भाजश्च ।

यतः औपाधिक एव भेदः अतः ज्ञानकर्मभ्यां देहाद्युपाधीनामात्यन्तिके अपाये सति जीवानामीशरूपैः समता भवेत् । यथा ईश्वररूपाणि कार्यावसाने स्वेच्छयैव लीलाविग्रहत्यागेन ईश्वरतामापाद्यन्ते तथा जीवा अपि अनुष्ठितज्ञानकर्मसमुच्चयाः । प्रारब्धकर्मावसाने देहाद्युपाधिभिः अत्यन्तविमुक्ताः सन्तः स्वाभाविकं ब्रह्मत्वमापद्यन्ते ।

भेदाभेद between ब्रह्मन् and जीवs is not स्वाभाविक. अभेद is स्वभाविक and भेद is औपाधिक like between ईश्वर and मत्स्याद्यंश. The only difference is मत्स्य etc. assume the उपाधि of लीलाविग्रह and their ऐश्वर्य is not veiled. In the case of जीव these will have body etc. उपाधि, due to अविद्या कामकर्म etc. The ब्रह्मस्वभाव of these is veiled and these suffer. However, when these get rid of उपाधि by ज्ञान and कर्म, attain equality with ईश्वर. Matsya etc

cast away the लीलाविग्रह when their purpose is over, similarly Jīvas also gets rid of body etc when their प्रारब्धकर्म is over and attain ब्रह्मत्व.

**Another objection against the concept आभासत्व of जीव.**

आभासत्व depends upon उपाधि. When उपाधि is removed then जीव has to perish.

On the other hand if उपाधि is permanent, then, जीव will have to be perpatualy in bondage.

अथाभासाः मुख्यतः सूर्यकादिवत् यदा ।

तदोपाध्यायत्तरूपाणां नाशिता भवेत् ।

यदि जीवानामुपाध्यायत्तता स्यात् तर्हि उपाधिनाशे सूर्यकादीनामिव तेषां नाशिता भवेत् । अथ उपाधयः अविनाशिनः तदा प्रत्यक्षादि-विरोधः, सर्वदा संसारित्वं च स्यात् इति उभयथा मोक्षशास्त्रवैयर्थ्यम् । तस्मात् सुस्थैव आभासत्वस्य असिद्धिः ।

**The rejection of the objection**

This objection is rejected by Sūtrakāra by the remark 'अत एवोपमा' by this remark सूत्रकार conveys that आभासत्व of जीव is quite distinct from the आभासत्व of सूर्यक etc.

**इत्याशङ्कानिवृत्यर्थमाह वेदाधिपः प्रभुः ।**

**अत एवोपमेत्येव चान्याभासविशेषिताम् ।** (अ.व्या.)

Abhāsatva of Jīva consists of depending on Supreme God in all respects, a little similarity with him, and the sentient nature. It is not due to उपाधि.

**यदुक्तं तदधीनत्वं सर्वावस्थास्वशेषतः ।**
**जीवस्य सदृशत्वं च चित्त्वमात्रं नचापरम् ।**
**तावन्मात्रेण चाभासो रूपमेषां चिदात्मनाम् ।**
**नोपाध्यधीनताद्यैश्च नातिसाम्यं निदर्शने ।**
**किञ्चित्सुखादिसादृश्यमपीशेनासुरानृते ।** (अ.व्या.)

अयं समुदायार्थः ।
ब्रह्माभासत्वादिति हेतोः ब्रह्माधीनत्वात्
तत्सदृशत्वाच्चेत्यर्थः । नतु सूर्यकादिवत् तत्प्रतिबिम्बत्वात् । (सुधा)

बिम्ब and प्रतिबिम्ब are not identical. The change of right and left positions and their presence inside and outside clearly indicates their distinction.

बिम्बप्रतिबिम्बयोरैक्यात् सूर्यकादिदृष्टान्तः साध्यसाधनविकलः इति चेत् न प्रमाणाभावात् । न तावत् प्रत्यक्षम् । तस्य प्रत्यक्त्वपराक्त्वादिना भेदग्राहित्वात् । अत्यन्तसादृश्यस्य सव्येतर करत्वादिना व्यभिचारात् । (सुधा)

Anuvyākhyāna explains the आभासत्व of जीव as-

**तत आभासते नित्यं तद्वदाभासतेऽपि च ।**
**भानमस्तित्वमपिचैवासमन्ताद् यतस्ततः ।**
**जीव आभास उद्दिष्टः सदैव परमात्मनः ॥** (अ.व्या.)

i) तेन परमात्मना निमित्तेन आभासते प्रतीतो भवतीति प्रतीतौ तदधीनत्वमुच्यते ।

ii) तद्वत् आभासते इति तत्सदृशत्वम् ।

iii) भानं ज्ञानम्, अस्तित्वं सत्त्वम् परमात्मनः एव आ सर्वकालवर्तिन्यौ जीवस्य भवतः ।

iv) परमात्माधीने आभासे यस्य सः परमात्माभासः ।

The expression आभास conveys that सत्ता and प्रतीति of जीव are परमात्माधीन. This is brought out by the phrase तत आभासते, तत्सदृशत्व aspect of आभासत्व is brought out by the phrase तद्वदाभासते.

The आभासत्व is not of the nature of the reflection of the sun in the water.

**न जलायत्तसूर्यादिप्रतिबिम्बोपमत्वतः ।** (अ.व्या.)

सूर्यादिप्रतिबिम्बाः । यथा उपाध्यायत्ताः तथा नेत्यर्थः । (सुधा)

**The kinds of उपाधिs of Jiva**

In this context a question is raised that Jīva is considered as प्रतिबिम्ब of परमात्मा and उपाधि is also stated. Hence, the question whether this उपाधि is नित्य or अनित्य has to be answered and the objections raised against these two positions have to be answered.

This is answered by pointing out that there are two kinds of उपाधि viz. आभ्यन्तर i.e. internal, बाह्य i.e.

external. The internal is permanent while external perishes.

**जीवोपाधिः द्विधा प्रोक्तः स्वरूपं बाह्य एव च ।**

**बाह्योपाधिः लयं याति मुक्तावन्यस्य तु स्थितिः ।**

**द्विविधो हि जीवोपाधिः । आभ्यन्तरो बाह्यश्च ।** (अ.व्या.)

तत्र स्वरूपप्रतिभासहेतुः आभ्यन्तरः ।

स्वभावविपर्यासहेतुः अन्तःकरणादिः बाह्यः । (सुधा)

i) उपाधेश्च नित्यत्वात् नैव जीवो विनश्यति ।

ii) निरुपाधिप्रतिबिम्बत्ववाचोयुक्तिरपि बाह्योपाध्यधीनत्वाभावाभिप्रायेण । (सुधा)

In the sūtra 'अत एव चोपमा सूर्यकादिवत्' the word एव conveys परमात्मधीनत्व and च conveys किञ्चित् सादृश्य.

**तदधीनत्वं 'एवेति' किञ्चित् सादृश्यमेव 'च' ।**

**सम्प्रकाशयतः सूत्रगतौ** (अ.व्या.)

एवेति शब्दः तदधीनत्वमेवेत्यर्थं, च शब्दः किञ्चित् सादृश्यमेवेत्यर्थं इत्युभौ अर्थद्वयं सम्प्रकाशयतः इति आवृत्या योज्यम् । प्रत्येकं च उपाध्यधीनत्वादिकं व्यावर्तनीयम् ।

This explanation of आभासत्व affirms जीवब्रह्मभेद, hence the concepts of भेदाभेद and समुदायैक्य are not valid.

**जीवेशभेददृष्ट्यैव समुदायैकता कुतः ।** (अ.व्या.)

**Jiva cannot be considered as अंश of God**

जीव cannot be considered as अंश of परमात्मा. It can be worked out in two ways :

i) अन्तःकरण, अविद्या etc adjuncts seperate जीवs from God as अंश and make them suffer from sorrow and bondage.

This explanation results in स्वातन्त्र्यहानि of God.

ii) God himself separates himself as जीवs and makes them to suffer from of sorrow and bondage.

This explanation amounts to saying that God himself inflicts the suffering on him.

Hence, the concept of अंशत्व of जीव and समुदायैक्य of जीवs with God are not justified.

i) अन्तःकरणाद्युपाधयः अविद्यादिनिमित्तानि च स्वशत्तया परमात्मानं विच्छिद्य तदंशस्य जीवस्य दुःखादिदोषान् कुर्वन्तीति न तावत् युज्यते । परमात्मनः सर्वशक्तिस्वातन्त्र्यादिहानिप्रसङ्गात् ।

ii) परमात्मैव सर्वशक्तिः स्वाधीनैरेव तैः स्वात्मानं विच्छिद्य स्वांशं जीवं दुःखादिदोषयोगिनं करोतीति ।। तच्च अयुक्ततरम् । अप्रेक्षावत्त्व-प्रसक्तेः नहि कश्चित् प्रेक्षावान् आत्मानं आत्माधीनैः अहिकण्टकादिभिः अपुरुषार्थभाजं कुर्वाणो दृष्टः ।

अतः परमपुरुषस्य न केनापि प्रकारेण दोषसंसर्गो युज्यते इति न दोषिणा जीवेन तस्यैक्यं युक्तम् ।

जीवब्रह्मैक्यवादिन् argue that though there is identity

between the two ब्रह्मन् has no अनुसन्धान i.e. the experience of sorrow etc of जीव.

Against this argument it is pointed out that this means there is no identity. Common experience is the ground of identity. If it is not found then there is no identity.

i) जीवब्रह्मणोरैक्येऽपि जीवगतदुःखाद्यनुसन्धानाभावात् नोक्तदोषः इति चेत् ।

**अनुसन्धानरहितमैक्यं चैदेकता न तत् ।** (अ.व्या.)

ii) अनुसन्धानं नाम भोगसमाख्यातः स्वीयतया दुःखादि साक्षात्कारः अभिमतः ।

जीवस्तावत् ब्रह्मस्वरूपं निर्दुःखत्वादिकं नानुसन्धत्ते इत्यविवादम् । ब्रह्मापि चेत् जीवगतं दुःखादिकं नानुसन्दध्यात् तदा तयोरेकत्वं नास्तीत्युक्तप्रायं स्यात् । (सुधा)

**चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरम् ।** (अ.व्या.)

अनुसन्धानैक्य is found when there is चेतनैक्य. For instance. अर्जुन is अंश of इन्द्र. अनुसन्धानैक्य is found between these two.

**जीवांशाः सर्व एवच ।**

**नियमेन अनुसन्धानवन्तः ।** (अ.व्या.)

जीवानामिन्द्रादीनामंशाः अर्जुनादयः ।

However, this अनुसन्धान is not in all respects, certain variation is caused by the God. This accounts

for the खाण्डवदहन by अर्जुन and the warding of it by इन्द्र.

i) ननु इन्द्रादीनामनुसन्धानसद्भावे कथं इन्द्रानभिमतं खाण्डव-दहनादिकं अर्जुनः कृतवान् । कथं च इन्द्रोऽर्जुनानभिमतं दहन-शमनादिकम् ।

ii) **अनुभूयते विशेषस्तु कश्चिदीशकृतो भवेत् ।**
**ईशस्याचिन्त्यशक्तित्वात् नाशक्यं क्वापि विद्यते ।**

(अ.व्या.)

Nyāyasudhā explains the procedure and scope of understanding ईशशक्ति.

i) यत् किञ्चित् विरुद्धमिव प्रतीयमानमपि ईश्वरे तदितरत्र वा प्रमाण-सिद्धम् ईश्वरैश्वर्यविरोधि न भवति यथा वा अर्जुनादीनां विशेषानुसन्धानाभावः तत्सर्वमीश्वरैश्वर्यबलेन घटतीत्यङ्गीकार्यं न निराकार्यम् ।

ii) यत् पुनरप्रमितं तदीश्वरैश्वर्याविरुद्धमपि न कल्पनीयम् । किन्तु तस्य प्रमाणस्य यथायोगमाभासत्वं वर्णनीयम् ।

**अरूपाधिकरणम्** (III-2-9)

ॐ अरूपवदेवहि तत्प्रधानत्वात् ॐ

**The God has अप्राकृत form**

In this adhikaraṇa by the sutra 'अरूपवदेव तत्प्रधान-त्वात्' the absence of प्राकृत form for the Supreme God is stated. However he has अप्राकृत form of the nature of his own ज्ञान, आनन्द etc. attributes.

i) स च अप्राकृतरूपत्वादरूपः

ii) स्वगुणात्मकं रूपमस्य शिरः पाणिपादाद्यात्मकमिष्यते ।

In view of this there is no conflict between रूपवत्त्वश्रुति and अरूपित्वश्रुति. Nor there is any room for अनित्यत्व of the form of the God.

**अतो नानित्यता नैव श्रुतिद्वयविरोधिता ।** (अ.व्या.)

This adhikaraṇa which occurs before उपमाधिकरण in the भाष्य is explained later in अनुव्याख्यान to indicate that उपमाधिकरण has सङ्गति with न स्थानतोधिकरण ।

ननु एतदधिकरणमत एव चोपमेति सूत्रात् पूर्वं तत् कथं पश्चात् व्याख्यातम् । उच्यते । अत एवेति सूत्रं न स्थानतोऽप्यधिकरणेन सङ्गतमिति ज्ञापनाय क्रमभेदः ।। (सुधा)

## वृद्धिह्रासाधिकरणम् (III-2-12)

ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्याद् ॐ

In this adhikaraṇa it is stated that there is भक्तितारतम्य on the ground that there is आनन्दतारतम्य in the liberated state. The भक्तs consist of different levels of भक्तs from चतुर्मुख ब्रह्मा to ordinary मुक्तियोग्य. Hence it is proper that there is a gradation of भक्ति and आनन्द in मुक्ति.

**तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ।**

**ब्रह्मादीनां च सर्वेषामानन्दादेर्यथाक्रमम् ।।** (अ.व्या.)

## स्थानविशेषाधिकरणम् (III-2-17)

ॐ स्थानविशेषात् प्रकाशादिवत् ॐ

In this adhikaraṇa two objections against भक्ति तारतम्य and आनन्दतारतम्य are answered.

i) Since the आनन्द of चतुर्मुख ब्रह्मा etc. are the प्रतिबिम्ब of आनन्द of परमात्मा there cannot be any तारतम्य of these as there is no तारतम्य in the आनन्द of बिम्ब i.e. परमात्मा.

न ब्रह्मादीनामानन्दस्य तारतम्यमुपपद्यते । भगवदानन्दप्रतिबिम्बत्वात् । बिम्बे च तारतम्याभावस्य न स्थानतोऽपीत्युक्तत्वात् । (सुधा)

ii) आनन्द of चतुर्मुखब्रह्म etc is not प्रतिबिम्ब of आनन्द of ब्रह्मन् as these have variation while आनन्द of ब्रह्मन् has no variation.

ब्रह्मादीनामानन्दो न भगवदानन्दप्रतिबिम्बः परस्परं विचित्रत्वात् । बिम्बाभिमते च वैचित्र्याभावात् । (सुधा)

These objections are answered by pointing out that just as the प्रतिबिम्बs of सूर्य vary due to the place of reflection such as mirror, water etc the आनन्द-प्रतिबिम्ब of चतुर्मुखब्रह्मा etc varies on account of the variation in their भक्ति.

यथा सूर्यादिप्रतिबिम्बानां सूर्यकान्तजलादिगतानां सूर्यादिबिम्ब-वैचित्र्याभावेऽपि सूर्यकान्तादिस्थानगुणवैचित्र्याद् वैचित्र्यम् तथा साधन-

भूतानां भत्त्यादीनां वैचित्र्येण परस्परं विचित्रो भवति । (सुधा)

**प्रतिबिम्बवदप्येषामानन्दोऽन्यगुणा यथा** । (अ.व्या.)

## पालकत्वाधिकरणम् (III-2-13)

ॐ प्रकतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ

In this adhikaraṇa the question whether स्थितिकर्तृत्व i.e. पालकत्व, is also necessary for God or not is raised.

It is accepted that the God is the creater and destroyer. The स्थिति in between these, is a natural position. This need not be especially undertaken by God. Hence, he has no स्थितिकर्तृत्व i.e. पालकत्व.

ईश्वरस्य पालकत्वं नोपपद्यते । स्थितेः तत्प्रयोजनत्वात् । तस्याश्च स्वभावसिद्धत्वेन ईश्वरानपेक्षत्वात् ।

This is answered by pointing out that even the स्थिति is under the control of the God.

परानपेक्षया प्रतीयमानं स्वरूपं धर्मो वा स्वभाव इत्युच्यते । स सर्वेषां पदार्थानाम् । स सर्वोऽपीशायत्त एव ।

The श्रुति, नैवावदेनापर etc. informs that the role of God should not be restricted to सृष्टि and स्थिति only.

प्रकृतस्य सृष्ट्यादिकर्तृत्वस्य एतावत्त्वमात्रम् सृष्टिसंहारकर्तृत्वमात्रपर्यवसितत्वं प्रतिषेधति ततः सृष्ट्यादिकर्तृत्वात् भूयः अधिकम् पालनकर्तृत्वं ब्रवीति । अतः पालकत्वरूपं महिमान्तरं हरेरस्ति ।

## अव्यक्ताधिकरणम् (III-2-14)

ॐ तदव्यक्तमाह हि ॐ

In this adhikaraṇa it is stated that though God is अव्यक्त by nature he reveals himself to his devotees to favour them.

**अव्यक्तोऽपि स्वशक्त्यैव दृश्यते भगवान् हरिः ।** (अ.व्या.)

जीवानामनुग्रहाय जीवशक्तयपेक्षया अव्यक्तोऽपि स्वशक्तयैव दृश्यते ।

(सुधा)

## उभयव्यपदेशाधिकरणम् (III-2-15)

ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ

**The qualities of God are identical with him**

In this adhikaraṇa it is established that the qualities, actions of the Supreme God are identical with God. This identity is not of the nature of निर्विशेषाभेद but it is of the type of सविशेषाभेद. That is to say, this अभेद permits भेदव्यवहार.

**तदभिन्ना गुणा नित्यमपि सर्वे विशेषतः ।**
**गुणत्वेन गुणित्वेन भोक्तृभोग्यतया स्थिताः ॥**

(अ.व्या.)

पारमेश्वराः सर्वे गुणाः धर्माः नित्यं तदभिन्नाः तेन अत्यन्ताभिन्नाः तथापि विशेषशक्तया गुणगुण्यादिभावेन स्थिताः ।

The attributes are two types यावद्द्रव्यभावि and अयावद्

द्रव्यभावि i.e. those that continue until the object continues and those that perish even when the object continues.

In the case of the attributes of God both these are identical with him. Even the latter continue in the form of potency. These manifest at the time of the respective actions and remain in the form of potency at other time. In view of this the latter also are नित्य i.e. यावद्द्रव्यभावि. In the case of God all attributes are यावद्द्रव्यभावि.

परिमाणादीनां यावद्द्रव्यभाविनां भवतु नाम भगवतात्यन्ताभेदः । क्रियाणां ज्ञानादिगुणानां च अस्राक्षीत्, सृजति, स्रक्ष्यति, व्यज्ञासीत्, जानाति, ज्ञास्यति इत्याद्यनित्यतया अवगतानां तु न युज्यते इत्यत आह ।

**The concept of सविशेषाभेद**

**विशेषात्मतया तेषां नित्यशक्त्यात्मना तथा ।**
**नित्यं स्थितेर्न धर्माणां क्रियादीनामनित्यता ।** (अ.व्या.)

परमेश्वरसम्बन्धिनां क्रियादीनां धर्माणां नित्यशक्त्यात्मना नित्यं स्थितेः तथा विशेषात्मतया व्यक्तिरूपेण व्यवहारविषयत्वोपपत्तेः न अनित्यता ।

The व्यक्ति stage is also not अनित्य. It is नित्य as it is identical with शक्ति stage. However, this identity is not निर्विशेषाभेद but it सविशेषाभेद. This accounts for शक्तिव्यक्ति व्यवहारभेद.

ननु क्रियादीनां या व्यक्तता सा तावत् अनित्यैव । ततः तस्याः भगवद्धर्मभूतायाः अपि नात्यन्ताभेदोपपत्तिरित्यत आह–

**न विशेषात्मता चैयमनित्या शक्तिरूपता ।**

**सैव यत् सविशेषा स्याद् विशेषेऽन्यो नचाप्ययम्** (अ.व्या.)

विशेषात्मता शक्तिरूपतैव । शक्तिश्च नित्येत्युक्तम् । नेयं व्यक्तिः शक्तया निर्विशेषाभिन्ना । किन्तु सविशेषाभिन्नैव ।

The विशेष which is the ground for भेदव्यवहार of शक्ति and व्यक्ति is identical with God. For this विशेष there is no need of another विशेष for its भेदव्यवहार as विशेष is स्वनिर्वाहक.

अयं विशेषोऽपि भगवतो नैव भिन्नः । तथापि तस्य विशेषता विशेषस्य स्वनिर्वाहकत्वात् ।

श्रुति talks of both अभेद and भेद of attributes of God. This has to be managed by the concepts of विशेष and सविशेषाभेद.

ससर्ज संहारेति विशेषो ह्यवगम्यते ।

श्रुत्यैव स स एवेति तदभेदश्च गम्यते ।

i) 'स इदं सर्वमसृजत' 'स द्यावा पृथिवी बिभर्ति' 'तत्तदत्तुमध्रियत्' 'स ऐक्षत' सोऽकामयत 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिश्रुत्या सर्जनादिकं विशेषः अतिशयः न ब्रह्ममात्रमित्यवगम्यते । तन्मात्रत्वे क्रियाकर्तृभावादेः अनुपपत्तेः ।

ii) 'आनन्दो ब्रह्मेति व्यजानात्' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'एक-

धैवानुद्रष्टव्यमित्यादिश्रुत्यैव तस्य तेन अभेदश्चावगम्यते । तदेत्रमुभय-व्यपदेशान्यथानुपपत्त्या सकलमिदं कल्प्यते ।

iii) i. सर्वेषां ब्रह्मधर्माणां ब्रह्मणा सविशेषाभेदः

ii. क्रियादीनां नित्यता शक्तिरूपता

iii. व्यक्तिरूपस्यापि नित्यता शक्तिरूपाभिन्नतः सविशेषता

iv. विशेषस्यापि अभेदः स्वनिर्वाहकता च ।

**भेद, अभेद and भेदाभेदवादिन् have to accept विशेष**

In respect of the relation between ब्रह्मन् and his attributes. Anuvyākhyāna quotes three views and points out that all three have to accept विशेष. Therefore it is better to go by सविशेषाभेद.

i) भेद एव ब्रह्मधर्माणां ब्रह्मणा अस्तु ।

समवायेन विशेषणविशेष्यभावो भविष्यति । समवायाभावेऽपि वा धर्मधर्मिणोरेव स कोपि महिमा कल्प्यते ।

ii) अपर आह । अखण्डमेव ब्रह्म न तु तत्र कश्चिद् विशेषः । क्रियादिविषयाणां सगुणविषयत्वात् ।

iii) अन्यस्त्वाह भेदाभेदाभ्यामेव उभयव्यपदेशसामञ्जस्योपपत्तेः किमनया सविशेषाभेदकल्पनया मैवम् ।

iv) त्रिभिरप्येतैः अन्ततो अभिन्ने विशेषस्य अङ्गीकर्तव्यत्वात् ततो वरमादित एव तदङ्गीकरणम् ।

Anuvyākhyāna and Sudhā examine these three views in detail and point out that विशेष has to be accepted to work out these views.

Even निर्विशेष ब्रह्मवादिन् has to accept विशेष to avoid पर्यायत्व of सत्य, ज्ञान and आनन्द.

**सच्चिदादेरपर्यायसिद्ध्यर्थं मायिनाऽपिहि । अङ्गीकार्यो विशेषोऽयम् ।** (अ.व्या.)

i) सत्यं ज्ञानमनन्तं ब्रह्मेति सत्यविषयाणि परेण अङ्गीकृतानि एव । तेषामखण्डार्थनिष्ठत्वे सत्यज्ञानादिपदानामेकार्थत्वेन पर्यायत्वं स्यात् । अतः सत्येऽपि विशेषो अङ्गीकार्यः ।

ii) सत्यत्वादिपदानि तावत् आपाततः सत्यत्वादिविशेषणानि समर्पयन्ति तदनन्तरं तद्विरोध्याकारनिवर्तकत्वे पर्यवस्यन्ति । यथोक्तम्–

**प्रतिपाद्यपदार्थं हि विरोधात् तद्विरोधिनः**

**पश्चादभावं जानाति वध्यघातकवत् पदात् ।** (अ.व्या.)

यथा मूषकानां संकुलं दृष्ट्वा तद्विरोधिनो मार्जारादेरभावं जानाति।

iii) **अनैश्वर्यविरोधित्वमप्येवं किं निवार्यते ।** (अ.व्या.)

तदेवमुभयव्यपदेशान्यथानुपपत्त्या भगवद्धर्माणां सविशेषोऽत्यन्ताभेदः सिद्धः ।

Sūtrakāra gives three examples to support the सविशेषाभेद concept.

i) अहिकुण्डलवत् i.e. like the coiled snake. The snake and its coiled state are identical. However, it is stated as the coil of the snake.

ii) प्रकाशाश्रयवत् i.e. like the sun with light. The sun

and the light are identical. However it is stated as the light of the Sun.

iii) पूर्ववद् वा i.e. earlier time. The time in general and earlier time are identical. However these are stated as different.

In these three instances there is सविशेषाभेद, that it to say there is अभेद that permits भेदव्यवहार.

As a result of the acceptence of the concept of सविशेषाभेद. The theory of अभिहितान्वयवाद and such other theories of sentence meaning stand rejected.

भगवद्रूपाणां भगवता सविशेषाभेदस्य समर्थितत्वात् पदाभिहितैः पदार्थैः अन्वयबोधः इत्येतन्मतं नेति लभ्यते । अभिहितान्वयग्रहणमुपलक्षणम् । वक्ष्यमाणानामन्विताभिधानव्यतिरिक्तानां सर्वेषां मतानाम् अनुपपन्नत्वात् ।

According to अन्विताभिधान theory, all words in a sentence get connected with the central word. The cnetral word conveys the connected meaning in a general way. The words specify the perticular attribute.

This is illustrated by explaining the meaning of the sentence 'सत्यं ज्ञानमनन्तं ब्रह्म.' 'यः सर्वज्ञः सर्ववित् ।'

In this sentence, the word ब्रह्मन् conveys ब्रह्मन् as qualified by सत्यत्व, ज्ञानत्व, सर्वज्ञत्व etc. in a general way. The words सत्यं ज्ञानं etc. specify the particular attributes.

एतदुक्तं भवति – सत्यं ज्ञानमनन्तं ब्रह्म यः सर्वज्ञः सर्ववित् इत्यादि-ब्रह्मप्रतिपादकवाक्यगतानि सकलान्यपि पदानि अन्वितार्थाभिधायीनि। तत्र ब्रह्मपदं सत्यत्वसर्वज्ञत्वाद्यशेषविशेषान्विनं ब्रह्म प्रतिपादयति । न चैवं सत्यादिपदानां वैयर्थ्यम् । यतः सामान्यतः एव अन्विताभिधाने शक्तिः न अन्वितविशेषाभिधाने अतः ब्रह्मपदेन समस्तयोग्यधर्मान्विते ब्रह्मणि प्रतीते सत्यत्वेन अन्वितं ज्ञानत्वेन अन्वितमिति विशेषान्वयप्रतिपत्त्यर्थानि ।

**The theory of अन्विताभिधान**

The driving point here is that since the attributes are identical with the object, when the object is comprehend the attributes are also comprehended. There is no object without attributes. However these attributes that are comprehended in a general way along with the object are particularly stated by the adjectives. The object and attributes are not separately conveyed by the words in a sentence.

**अतः सामान्यतो ज्ञातः पदान्तर बलात् पुनः**
**भवेद् विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिता ।** (अ.व्या.)

एकैकशः पदैः सामान्यतया अन्विततया ज्ञातः अर्थः पुनः पदान्तर-सन्निधानाहितशक्तिबलात् । विशेषतो अन्वितत्वेन ज्ञातो भवति । तेन कारणेन पदानामन्वितोक्तिता उपपन्ना ।

**The drawbacks of अभिहितान्वय theory**

After explaining अन्विताभिधान' theory of sentence meaning Anuvyākhyāna points out the drawbacks of

अभिहितान्वय theory. According to अभिहितान्वय theory words convey the word meanings and these aided by आकाङ्क्षा योग्यता and सन्निधि convey अन्वय. In this explaination अन्वय ceases to be शाब्द i.e. verbal communication.

i) यदि पदानि अनन्वितान् स्वार्थान् प्रतिपाद्य निवर्तन्ते । ततः पदार्था एव आकाङ्क्षादिमन्तः अन्वयं बोधयन्ति तर्हि अन्वयस्य शाब्दत्वं न स्यात् ।

ii) पदार्थाख्यं प्रमाणान्तरं च आपद्येत ।

Anuvyākhyāna concludes this adhikaraṇa with the remark that the Supreme God has infinite number of attributes. These are identical with him.

**अंतोऽनन्तगुणात्मैको भगवानेक एवतु । उच्यते सर्ववेदैश्च**

(अ.व्या.)

i) अनन्तगुणात्मकत्वेऽपि न तस्य ऐक्यं विहन्यते । नापि एकेन अभिन्नानामनन्तत्वं गुणत्वं च ।

## परमताधिकरणम् (III-2-16)

ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ

In this adhikaraṇa it is stated that ज्ञान, आनन्द etc. qualities of Supreme God are quite distinct from the ज्ञान, आनन्द etc. of Jīvas. Each quality of God is identical with other qualities.

तेच अखिलविलक्षणाः । सर्वे सर्वगुणात्मानः सर्वकर्तार एव च । (अ.व्या.)

i) ते गुणाः न केवलं गुणिना अभिन्नाः किं नाम अखिलेभ्यः लौकिकानन्देभ्यः विलक्षणाश्च ।

ii) आनन्दोऽपि ज्ञानात्मको ज्ञानमपि आनन्दात्मकमित्यादि । सर्वकर्तारो जगत्सृष्ट्यादिकर्तारश्च ।

Though आनन्द etc of God are distinct, these are referred by the same word आनन्द etc. for the convinience of the understanding by ordinary persons like Jīva being referred by the word पाद of the God.

ॐ बुद्ध्यर्थः पादवत् ॐ

The आनन्द of Jīva is a little similar to that of God. in view of this the same word is used to convey God's आनन्द.

लौकिकानन्दसादृश्यं भगवदानन्दादेः विद्यते । ततश्च योऽस्मदानन्दादि सदृशो भगवद्गुणः स आनन्दादिशब्दवाच्यः इत्यादिरुपदेशो घटते ।

पूर्णोऽशेषनियन्ता च सुखादुत्तम एकलः ।
गुणोरुसमुदायोऽयं वासुदेवः सुनिष्कलः ।
वासुदेवश्रुतिश्चैषा गुणान् वक्ति हरेः परान् ।

**फलदानाधिकरणम्** (III-2-20)

ॐ फलमत उपपत्तेः ॐ

The result of कर्म is bestowed by God only. The कर्म is अचेतन, it cannot bestow any result on its own. However God bestows the result taking into account धर्म and अधर्म. As these are under his control his indepedence is not affected.

i) फलदाने तु ईश्वरः कर्तृत्वेन कर्मतु करणत्वेन पुण्येन पुण्यमित्यादौ व्यपदिश्यते । करणं च कर्तृप्रयोज्यमिति प्रसिद्धमेव ।

ii) लीलया करणीकरोति न तु तेन विना दातुं शक्नोतीति ।

## Chapter III Section III

At the commencement of this section Anuvyākhyāna states the themes of the four sections of the third chapter.

वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् ।
आपरोक्ष्यं भवेद् विष्णोरिति पादक्रमो भवेत् ।।

(अ.व्या.)

Cultivating वैराग्य developping deep devotion, observing meditation, acquiring the knowledge through the Śāstra and attaining the direct vision of the Supreme God are stated in the four sections of the third chapter respectively.

The grace of the God is the final means of liberation. Above four are the means to obtain the grace of the God.

साधनविचारोऽयं तावदध्यायः मोक्षसाधनं च भगवत्प्रसाद एव ।

तत्साधनानि च विषयवैराग्यं भगवद्भक्तिः तदुपासना तत्साक्षात्कारः इति चत्वारि ।

**The topics discussed in earlier chapter**

After stating the themes of the third chapter Anuvyākhyāna recapitulates the points made in all earlier chapters and Sūtras. The points made in the first five adhikaraṇa are particularly stated.

i) युक्तितो ज्ञातवेदार्थो निरस्य समयान् परान् ।
परस्परविरोधं च प्रणुद्याशेषवाक्यगम् ।
बहुयुक्तिविरोधानां भानात् तत्सहितश्रुतेः विरोधं च निराकृत्य ।

ii) उत्पाद्याधिकवैराग्यं तद्गुणाधिक्यवेदनात् ।
सर्वस्य तद्वशत्वाच्च दार्ढ्यं भक्तेरवाप्य च ।
यतेतोपासनायैव विशिष्टाचार्यसम्पदा ।। (अ.व्या.)

In the above Anuvyākhyāna verses the statement यतेतोपासनयैव conveys that ब्रह्मजिज्ञासा has to be undertaken. The expression ज्ञातवेदार्थः which conveys that सर्ववेदानां भगवानेव अर्थः इति ज्ञानवान् summarises the theme of the entire first chapter.

युक्तितः निरस्य, समयान् परान् निरस्य summarises the points made in the first and the second sections of the second chapter. The expression परस्परविरोधं च summarise the points made in the third and fourth sections of the second chapter.

i) तत्र यतेतोपासनयैव इत्यनेन ब्रह्मजिज्ञासा कर्तव्येतद् व्याख्यातम् ।

ii) तत्र ज्ञातवेदार्थ इति सर्ववेदानां भगवानेवार्थः इति ज्ञानवानित्यनेन प्रथमाध्यायप्रमेयमुक्तम् ।

iii) युक्तितः निरस्य वेदार्थविरोधिनीः युक्तीः सामान्यतो निरस्येति द्वितीयाद्यपादस्य ।

iv) परान् वैष्णवसमयादन्यान् सांख्यादिसमयान् सामान्यतो निराकृत्येति द्वितीयपादस्य ।

The statement वैराग्यमुत्पाद्य states the point made in the first section of third chapter दाढर्च्यं भक्तेरवाप्य states the theme of the second section of third chapter.

Further, Anuvyākhyāya explains the connection among the first five sūtras.

In the first sūtra undertaking enquiry of brahman is stated. This riases the question regarding the nature of brahman. This is explained in the second sūtra as सृष्टाद्यष्टकर्ता. This includes बन्धकर्तृत्व and मोक्ष-दातृत्व also. Since brahman is मोक्षदाता enquiring the nature of brahman for obtaining his knowledge and grace is necessary.

कर्तव्या ब्रह्मजिज्ञासेत्युक्ते किमिति संशये ।
सृष्टिबन्धनमोक्षादिकर्तृत्वस्य श्रुतत्वतः ।
यतो मोक्षादिदातासावतो जिज्ञास्य एवहि । (अ.व्या.)

